झसादौ स्वरे परे तद्धिते ईपि ईकारे च । तद्धिते स्वरे तु न भवति । अत्र नियामकं भामिनीपक्षसूत्रम् । अपुरमघोनामतद्धिते । तेन माघवनं भवति । शुनः । शुना श्वभ्याम् श्वभिः । शुने श्वभ्याम् श्वभ्यः । शुनः श्वभ्याम् इत्यादि । हेश्वन् हेश्वानौ हेश्वानः । युवा युवानौ युवानः । युवानम् युवानौ । युवन्शब्दस्य वकारस्योत्वे कृते । सवर्णे दीर्घः सह ( प्र २ सू १० ) यूनः । यूना युवभ्याम् युवभिः । यूने युवभ्याम् युवभ्यः इत्यादि । हेयुवन् हेयुवानौ हेयुवानः । मघवा मघवानौ मघवानः । मघवानम् मघवानौ । मघवन्शब्दस्योत्वे कृते । उभो ( प्र २ सू ११) मघोनः । मघोना मघवभ्याम् मघवभिः । मघोने । मघवभ्याम् मघवभ्यः इत्यादि । हेमघवन् हेमघवानौ हेमघवानः ॥ मघवा बहुलम् ।२३। मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋकारो रित्कार्यार्थः । मघुट्महन्त्वसर्वे नियमो न्नमिधरम्बि । त्रिसौ नुम् ( प्र ६१ ) मघवान् । नश्चापदान्ते झले ( प्र ४ सू २४ ) मघवन्तौ मघवन्तः । मघवन्तम् मघवन्तौ मघवतः । मघवता मघवद्भ्याम् मघवद्भिः । मघवते मघवद्भ्याम् मघवद्भ्यः इत्यादि । हेमघवन् हेमघवन्तौ हेमघवन्तः । ॥ 'स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ' इति प्रयोगदर्शनात् ॥ अर्वणस्त्रसावनञः ।२४। अनञ्पूर्वस्यार्वन्शब्दस्य तृ इत्यन्तादेशः स्यात् सौ विभक्तौ परतः । अर्वा अर्वन्तौ अर्वन्तः । अर्वन्तम् अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम् अर्वद्भिः अर्वते अर्वद्भ्याम् अर्वद्भ्यः इत्यादि । हेअर्वन् हेअर्वन्तौ हेअर्वन्तः । अनञ्पूर्वस्येति किम् । नोपधायाः ( प्र ८ सू ७ ) अनर्वा अनर्वाणौ अनर्वाणः । अनर्वाणम् अनर्वाणौ अनर्वणः । अनर्वणा अनर्वभ्याम् अनर्वभिः अनर्वसु इत्यादि । पथिन्शब्दस्य भेदः ॥ इदोत्पथसु ।२५। इत् अत् पथसु । पथसु स्यादिषु पथ्यादीनामिकारस्याकारो भवति ॥ थो न्थ् ।२६। पथ्यादीनां थकारस्य न्थ् इत्यागमो भवति पथसु परेषु । पथ् मन् सि इति स्थिते ॥ आ सौ ।२७। आ सौ । पथ्यादीनां टेरात्वं भवति सौ परे । पन्था पन्थानौ पन्थानः । पन्थानम् पन्थानौ ॥ पथां टेः ।२८। पथ्यादीनां टेर्लोपो भवति झसादौ स्वरे परे तद्धिते ईपि ईकारे च । पथः । पथा पथिभ्याम् पथिभिः । पथे पथिभ्याम् पथिभ्यः । पथः पथिभ्याम् पथिभ्यः । पथः पथोः पथाम् । पथि पथोः पथिषु । हेपन्था हेपन्थानौ हेपन्थानः । एवं मथिन् ऋभुक्षिन् प्रभृतयः । मन्था मन्थानौ मन्थानः । ऋभुक्षा ऋभुक्षाणौ ऋभुक्षाणः इत्यादि । दण्डिन्शब्दस्य भेदः ॥ इन्हन्पूषार्यम्णां शौ सौ ।२९। इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति । दण्डी दण्डिनौ दण्डिनः । दण्डिनम् दण्डिनौ दण्डिनः । दण्डिना दण्डिभ्याम् दण्डिभिः । दण्डिने दण्डिभ्याम् दण्डिभ्यः । दण्डिषु इत्यादि । हेदण्डिन् हेदण्डिनौ हेदण्डिनः । ब्रह्महा ब्रह्महणौ ब्रह्महणः । ब्रह्महणम् ब्रह्महणौ । अल्लोपः स्वरे ( प्र ८ सू ११ ) हनो घ्नि ।३०। हन घ्ने । हन्तेर्धातोर्हकारस्य घत्वं भवति अल्लोपवति नकारे परे स्वरभावे ञिति णिति च परे ॥ असंयोगो ऽन्तमिमेवार्थं ॥ इन्हेरपूर्वस्य ।३१। इन्हेरकारपूर्व

इदम् सकारे भकारे च परे अकारादेशो भवति इदमस्य । त्यदादित्वा-
दत्वसिद्धौ पुनरत्वविधानं सर्वादेशार्थम् । वृत्ताइ । ह्रस्वस्येति । अती ( प्र १ सू
११ ) भ्यातम् । आभ्याम् ॥ भिसभिस् । ४१ । इदमदसोर्भिस् भिसेव भवति ।
तेन भकारस्य ऐसं न । परेभि बहुले ( प्र १ सू १५ ) एभिः । इदम् के
इति स्थिते । त्यदादेष्टेरःस्यादौ ( प्र १ सू ५५ ) सर्वादे स्मट् ( प्र १ सू
२८ ) स्म्य ( सू २९ ) अस्मै आभ्याम् एभ्यः । ङसिरत् ( प्र १ सू १६ )
स्मात् ( प्र० १ सू २९ ) अस्मात् आभ्याम् एभ्यः । टङस्य ( प्र १ सू
१७ ) अस्य । अन दीर्घो ( सू ३९ ) ओसि ( प्र १ सू १८ ) एत्वम् ( प्र
२ सू ९ ) अनयोः । सुडामः ( प्र १ सू १ ) स्म्य (२९) परेभि बहुले
( १५ ) किलात् ( प्र १ सू २१ ) एषाम् । ङि स्मिन् ( प्र १ सू ३१ )
अस्मिन् अनयोः एषु । त्यदादीनां संबोधनाभावः ॥ इदमोऽप्यन्वादेशे द्वि-
तीयाटौस्स्वेनादेशो वक्तव्यः ।४२। एतस्य पुनर्भाषणमन्वादेशस्तस्मिन् एने-
नाद् । एनेन एनयोः एनयोः । प्रशाम्शब्दस्य भेदः । मो नो धातोः ।४३।
धातोर्मकारस्य नकारादेशो भवति रसे पदान्ते च । प्रशान् प्रशानौ प्रशानः । हे
प्रशान् हेप्रशानौ हेप्रशानः । प्रशानम् प्रशानौ प्रशानः । प्रशाना प्रशान्भ्याम् प्रशा-
न्भिः इत्यादि । किंशब्दस्य भेदः । किंशब्दस्य त्यदादेष्टेरः स्यादाविति सर्वत्राकारे
कृते सर्वशब्दवद्रूपं ज्ञेयम् । कः कौ के । कम् कौ कान् । केन काभ्याम् कैः ।
कस्मै काभ्याम् केभ्यः इत्यादि । जकारान्तस्तत्त्वभुज्शब्दः तस्य रसे पदान्ते च भा-
विजकारो भजन्तस्य सभावः स्वो ( सू ७ ) वावसाने ( सू ८ ) तत्त्वभुक्-त
त्त्वभुग् तत्त्वभुजौ तत्त्वभुजः । तत्त्वभुजम् तत्त्वभुजौ तत्त्वभुजः । तत्त्वभुजा तत्त्वभुग्भ्या-
म् तत्त्वभुग्भिः । इत्यादि । हे तत्त्वभुक्-हेतत्त्वभुग् हेतत्त्वभुजौ हेतत्त्वभुजः । जका-
रान्त सम्राज्शब्दः ॥ छशषराजादेः षः ।४४। छकारान्तस्य शकारान्तस्य
षकारान्तस्य राजृयजसृजभ्रस्जभ्राजादेश्च षकारो भवति धातोर्धसे परे नाम्नश्च रसे
पदान्ते च । यस्य षत्वं तन्निषेधार्थम् । तेन भास्यादौ सेट्यादौ न भवति ॥
षो डः ।४५। ष ड । षकारस्य डत्वं भवति धातोर्धसे परे नाम्नश्च रसे प-
दान्ते च । वावसाने ( सू ८ ) ॥ मोराजि समः क्वौ ।४६। क्विबन्ते रा-
जतौ परे समो मस्य म एव स्यात् । तेनानुस्वाराभावः । सम्राड्-सम्राट् सम्राजौ
सम्राजः । सम्राजम् सम्राजौ सम्राजः । सम्राजा सम्राड्भ्याम् सम्राड्भिः इत्या-
दि । सम्राट्सु । हेसम्राड्-हेसम्राट् हेसम्राजौ हेसम्राजः । एवं विराजादयः ॥
युजेरसमासे ।४७। युजे नुटि नुम् स्यादसमासे ॥ क्विप्रत्ययस्य कुः ।
४८। क्विबन्तस्य धातोः कत्वमेतेभ्यो वा स्यादसमासे सति पदान्ते च । अनुप-
सर्गेण नकारान्तस्य नत्वम् । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ युञ्जः । युञ्जम्
युञ्जौ युजः । युजा युग्भ्याम् युग्भिः । युजे युग्भ्याम् युग्भ्यः । चोः कुः ( सू ५२ )
ससे षत्वं ( प्र ४ सू १८ ) किलात् ( प्र १ सू २१ ) कषसंयोगे क्षः
( सू १० ) युक्षु । हेयुङ् हेयुञ्जौ हेयुञ्जः इत्यादि । असमासे किम् । अश्वयुक्-

स्यादिष्वलोपः । पेचुषः । पेचुषा पेचिवद्भ्याम् इत्यादि । सकारान्तो जग्मिवस्शब्दः । जग्मिवान् जग्मिवांसौ जग्मिवांसः । जग्मिवांसम् जग्मिवांसौ । इट. वकारमुपीस्य माससाद्स्योसे कृते इटोऽपि निवृत्तिः । गमां स्वरे ( पू २ प्र १ सू १०३ ) इत्यनेन उपधालोपः । जग्मुषः । जग्मुषा जग्मिवद्भ्याम् । जग्मिवत्सु इत्यादि । जगन्वान् जगन्वांसौ जगन्वांसः । जगन्वांसम् जगन्वांसौ । अस्मिन् पक्षे कृते मकारनिमित्तस्य मो नो धातोः ( सू ५२ ) इति मकारस्यापि नकारः । गमां स्वरे ( १०७ ) इति उपधालोपः जग्मुषः । जग्मुषा जगन्वद्भ्याम् इत्यादि । एवं जघन्वान् जघन्वांसौ जघन्वांसः । जघन्वांसम् जघन्वांसौ जघ्नुषः । जघ्नुषा जघन्वद्भ्याम् इत्यादि । सकारान्तः सुवचस्शब्दः । अत्वसो सौ ( सू ६१ ) सुवचाः सुवचसौ सुवचसः । सुवचसम् । सुवचसौ इत्यादि । हे सुवचः हे सुवचसौ हे सुवचसः । एवं चन्द्रमस्शब्दः । अत्वसो सौ ( सू ६१ ) इत्येन सेर्दीर्घः ( प्र १ सू ११ ) चन्द्रमाः चन्द्रमसौ चन्द्रमसः । चन्द्रमसम् चन्द्रमसौ चन्द्रमसः । चन्द्रमसा चन्द्रमोभ्याम् चन्द्रमोभिः । चन्द्रमस्सु-चन्द्रमःसु । हे चन्द्रमः हे चन्द्रमसौ हे चन्द्रमसः इत्यादि । उशनस्शब्दस्य भेदः ॥ उशनसश्च ॥ ७३ । उशनस् पुरुदंशस् अनेहस् इत्येतेषां सेर्डा भवतीति डित्वाट्टिलोपः । उशना उशनसौ उशनसः । उशनसम् उशनसौ उशनसः । उशनसा उशनोभ्याम् उशनोभिः । उशनस्सु-उशनःसु इत्यादि । उशनसो धौ नान्तताऽदन्तता वा वक्तव्या । हे उशनम्-हे उशनन्-हे उशन हे उशनसौ हे उशनसः । सम्बोधने रूपत्रयम् । संबोधने तूशनसस्त्रिरूप-मिति वचनात् । पुरुदंशा पुरुदंशसौ पुरुदंशसः इत्यादि । अनेहा अनेहसौ अनेहसः । अनेहसम् हे अनेहः इत्यादि । अदस्शब्दस्य भेदः । त्यदादेः ( प्र० ६ सू० ६५ ) इति सर्वत्राकारः अद सि इति स्थिते ॥ सौ सः । ७४ । अदसो दकारस्य सौ परे सत्वं भवति ॥ सेरौ । ७५ । अदसः सेरौकारादेशो भवति । असौ । द्विवचने अदस् औ इति स्थिते ॥ दस्य मः । ७६ । त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे औमौ ( प्र० २ सू० १४ ) अमौ इति स्थिते ॥ मादू । ७७ । अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारादेशो भवति दीर्घस्य च दीर्घ ऊकारादेशो भवति । अमू । सर्वादित्वाज्जसः ( प्र० ६ सू० २५ ) दस्य मः ( ७६ ) अदए ( प्र० २ सू० ११ ) अमे इति स्थिते ॥ एरी बहुत्वे । ७८ । एः ई बहुत्वे । बहुत्वे सति मकारात्परस्य अदस एकारस्य ईकारादेशो भवति । अमी । ईकारविधिसामर्थ्यान्नमुकारः । अमुम् अमू अमून् । अतोऽन्ते कृते टानाऽस्त्रियाम् । अमुना अमूभ्याम् अमीभिः । अदस् ङे इति स्थिते । ङकारे इत्यनुवर्तते । त्यदादेः स्यादौ (प्र० ६ सू० ६५) दस्य मः (सू० ७६) सर्वादि स्मट् ( प्र० सू० १८ ) मादू ( सू० ७७ ) अमुष्मै अमूभ्याम् अमीभ्यः । त्यदादेः स्यादौ ( ६५ ) दस्य मः ( ७६ ) ङसिरत् ( प्र० ६ सू० १६ ) अत ( प्र० १ सू० ११ ) सवर्णे दीर्घः ( प्र० २ सू० १० ) मादू ( ७ ) अमुष्मात् अमूभ्याम् अमीभ्यः । दस्य ( प्र० ६ सू० १७ ) मादू ( ७७ ) ङिरताय ( प्र०

(२ ) अहोभ्याम् अहोभिः । अह्ने अहोभ्याम् अहोभ्यः । अहःसु इत्यादि ॥ संबोधने नपुंसकानां नलोपो वा वक्तव्य ।२। हेम-हेमन् हेमनी हेमानि । एवं चर्मन्‌वर्मन्‌कर्मन्‌प्रभृतयः । चर्म चर्मणी चर्माणि पुनरपि । वर्म वर्मणी वर्माणि पुनरपि । एवं व्योमन्‌शब्दः । व्योम । ईमौ (प ८ सू २) वैकल्प्ये (प ८ सू १४) व्योम्नी-व्योमनी व्योमानि । पुनरपि ॥ मान्ताद्वान्ताच्छन्दसि नियोर्वा लोपो वक्तव्य ॥ ३ ॥ छन्दस्यागमजामागमजयोर्लोपालोपौ च वक्तव्यौ ।४। परमे व्योमन् । सर्वाभूतानि । सर्वा इत्यत्र शिलोपे कृते नलोपः । दीर्घत्वं नास्त्यत्र । निमित्ताभावे नैमित्तिकस्याप्यभाव इत्येतस्यागमत्वसंभावितत्वात् । स्यदादीनां स्यमोर्लुकि कृते टेरत्व न भवति । कस्मात् । स्यदादिविधौ निषेधनात् । लुकि न तन्निमित्त (प० ६ सू ५८) नपुंसकात्स्यमोर्लुक् (प ८ सू १ ) वावसाने (प० १ सू ८) स्यद्-स्यत् । स्यदादेष्टेः स्यादौ (प ६ सू ५५) इति सर्वत्राकारः । ईमौ (२) स्ये । जस्शसोः शिः (प ८ सू ५) नोपधायाः (प ८ सू ७) त्यानि । पुनरपि । शेषं सर्ववत् । तद्-तत् ते तानि । पुनरपि । यद्-यत् ये यानि । पुनरपि । एतद्-एतत् एते एतानि । पुनरपि ॥ इदमेतदोर्द्वितीयैकवचने नपुंसके एनद्वा वाच्य ।५। एतद्-एतत् एनद्-एनत् एते-एने एतानि-एनानि । एतेन-एनेन इत्यादि । किम् के कानि । पुनरपि । इदम् इमे इमानि पुनरपि इदम्-एनत् । एनद् इमे-एने इमानि-एनानि । अनेन एनेन इत्यादि । नपुंसकात्स्यमोर्लुक् (१) न्वोर्कुः (प १ सू ५६) वावसाने (८) प्रत्यक् प्रत्यग् । ईमौ (२) अनेर्दीर्घश्च (प १ सू ५४) प्रतीची । जस्शसोः शिः (५) नुमयमः (प १ सू ५) स्तोः श्चुभिः श्चुः (प ४ सू ६) प्रत्यञ्चि पुनरपि । शेषं पूर्ववत् । तकारान्तो जगच्छब्दः । वावसाने (८) जगद्-जगत् । ईमौ (२) जगती । नुमयमः (प सू ५) नश्चापदान्ते झसे (प ४ सू १४) जगन्ति । पुनरपि । महद् महत् महती । न्सम्महतो (प १ सू ६२) नश्चापदान्ते झसे (१४) महान्ति । पुनरपि । सकारान्ताः पयस्‌यशस्‌मनस्‌तेजस्प्रभृतयः । पय पयसी । न्सम्महतो (६२) पयांसि । पुनरपि । यशः यशसी यशांसि । पुनरपि । मनः मनसी मनांसि । पुनरपि । तेजः तेजसी तेजांसि । इत्यादि । अदस्शब्दस्य स्यमोर्लुकि कृते स्रोर्विसर्गः (प ६सू ४) अदः । द्विवचनादौ टेरत्वे कृते मत्वोत्वे कृते । अदू । त्यदादेष्टेः स्यादौ (प ६सू ५५) दस्य मः (प १ सू ७५) जस्शसोः शिः (प ८ सू ५) नुमयमः (५) नोपधायाः (प ८ सू ७) मादू (प १ सू ७६) अमूनि । पुनरपि । अमुना । अमि (प १ सू ११) मादू (७६) अमूभ्याम् एभिस् (प ६ सू १५) एदी बहुत्वे (प १ सू ७७) अमीभिः । सर्वादेः स्मट् (प ६ सू १८) ङे (प १ सू ११) मादू (७६) अमुष्मै अमूभ्याम् अमीभ्यः । ङसिरत् (प ६ सू १६) अत (प ६ सू २१) समाने दीर्घः सह (प २ सू १ )

अमु ( ७६ ) अमुष्मात् अमूभ्याम् अमीभ्य । ङस्य ( प्र १ सू १७ ) अमु ( ७६ ) अमुष्य । ओसि ( प्र १ सू १८ ) एयम् ( प्र २ सू १ ) अमुयोः । सुडाम ( प्र १ सू ३ ) एत्विम बहुत्वे ( ७५ ) अमीषाम् । ङि स्मिन् ( प्र १ सू ३१ ) अमुष्मिन् अमुया । एत्विम बहुत्वे ( ७५ ) किशात् ( प्र १ सू ३१ ) अमीषु ॥ ॥ इति हलन्तपुंलिङ्गप्रक्रिया ॥ ११ ॥

---

अथ युष्मदस्मदो रूपं निरूप्यते ॥ ॥ तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समानं रूपम् । अत एवास्पलिङ्गानि । अलिङ्गे युष्मदस्मदी ॥ त्वमहं सिना । १ । सिसहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन । त्वम् । अहम् ॥ युवावौ द्विवचने । २ । युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः ॥ आमौ । ३ । युष्मदस्मद्भ्यां परः औ आम् भवति । सवर्णे दीर्घः सह ( प्र २ सू २ ) युवाम् आवाम् ॥ यूयं वयं जसा । ४ । जसा सहितयोर्युष्मदस्मदोर्यूयं वयमित्येतावादेशौ भवतः । यूयम् वयम् ॥ त्वन्मदेकत्वे युष्मदस्मदोः । ५ । त्वन्मदित्येतावादेशौ भवत एकत्वे गम्यमाने ॥ आम्भौ । ६ । आ अम्भौ । युष्मदस्मदोरात्वं भवति अमि सकारे भिसि च परे । अमशसोरस्य ( प्र १ सू १ ) त्वाम् माम् । युवाम् आवाम् । स्वरादेते ( प्र १ सू ५५ ) इत्यत्र हृते सति दीर्घत्वम् ॥ शसो नो यकारश्च । ७ । युष्मान् अस्मान् । त्वन्मदेकत्वे ( प्र ११ सू ५ ) ए टाङ्योः । ८ । युष्मदस्मदोरेत्वं भवति टा ङि इत्येतयोः परयोः । एयम् ( प्र २ सू १ ) त्वया मया । युवावौ द्विवचने ( २ ) आत्वं ( प्र १ सू ११ ) युवाभ्याम् आवाभ्याम् । आम्भौ ( ६ ) युष्माभिः अस्माभिः ॥ तुभ्यं मह्यं ङया । ९ । ङया सहितयोर्युष्मदस्मदोस्तुभ्य मह्य इत्येतावादेशौ भवतः । तुभ्यम् मह्यम् । युवाभ्याम् आवाभ्याम् ॥ भ्यसस्भ्यम् । १० । युष्मदस्मद्भ्यां परो भ्यस् भ्यम् भवति । अकारो भकारपरेऽभ्यम्यामुत्पत्यर्थं । तेनात्वैत्वे न भवतः । स्वरादेते ( ५५ ) युष्मभ्यम् अस्मभ्यम् ॥ ङसिभ्यसोरत् । ११ । पञ्चम्या ङसिभ्यसोः अत् भवति । तकारः सर्वादेशार्थः । अकार उच्चारणार्थः । त्वत् मत् । युवाभ्याम् आवाभ्याम् । स्वरादेते ( प्र १ सू ५५ ) युष्मत् अस्मत् ॥ तव मम ङसा । १२ । ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः । तव मम । युवावौ द्विवचने ( प्र ११ सू २ ) ओसि ( प्र १ सू १८ ) एयम् ( प्र २ सू १ ) युवयोः आवयोः ॥ सामाकम् । १३ । युष्मदस्मद्भ्यां परः साम् आकं भवति । स्वरादेते ( ५५ ) युष्माकम् अस्माकम् । त्वन्मदेकत्वे ( प्र ११ सू ५ ) ए टाङ्योः ( प्र ११ सू ८ ) एयम् ( ९ ) त्वयि मयि । युवयोः आवयोः । आम्भौ ( प्र ११ सू ६ ) युष्मासु अस्मासु । अथानयोर्गौणत्वे रूपविशेषो निरूप्यते । यदा एकत्वे स्थिते च युष्मदस्मदी

योरमयोरन्वादेशेऽप्येते आदेशा वा वक्तव्याः । ६ ।

भक्तस्त्वमप्यहं तेन हरिस्त्वां पायते स माम् ॥ ५० ॥

अचाक्षुषज्ञानार्थधातूनां योगे नैते आदेशा वक्तव्याः । ७ । चेतसा त्वामीक्षते ध्यायति स्मरतीति वा । चाक्षुषज्ञानार्थधातुयोगे तु भक्तस्त्वा पश्यति । चक्षुषा युक्तायुक्तेऽपि निषेधः । भक्तस्त्वद्रूपं ध्यायति । ध्यायते रूपेण सह सम्बन्धाद्ध्यानेन युक्तं रूपं स्वरूपेण युक्तस्य त्वीयस्य युक्तायुक्तत्वात् ॥

संबोधनपदात्परे न भवन्ति वसादयः ॥

विशेष्यपूर्वं संबोधनेतरपूर्वं सम्बोधनं हित्वा अन्यस्मात्संबोधनात्परयोर्नैते आदेशा भवन्ति । ८ । इति केचित् ॥

देवास्मान्पाहि भूदेवैः विष्णोऽस्मान्पाहि सर्वतः ॥ ५१ ॥

विशेष्यपूर्वात् । हरे कृपालो नः पाहि । संबोधनेतरपूर्वात् । सर्वदा रक्ष देव नः ॥ चादिभिश्च । ९ । चादिभिरपि योगे नैते आदेशा भवन्ति ॥

युवयोरावयोरीशो हरिर्मामिव रक्षतु ॥
तुभ्यं मह्यं च देवेशो दद्याच्छं तुभ्यमेव च ॥ ५२ ॥

च वा ह अह एव । आदिशब्देनैते पञ्चैव गृह्यन्ते नान्ये । न चवाहाहैवयुक्ते इति पाणिनीयवचनात् । समाहारयोगेऽपि निषेधः । न पुनर्युक्ते शिवो हरिश्च मे स्वामीत्यत्र इति आदेशविधिप्रक्रिया ॥ १६ ॥

---

चादिर्निपातः । १ । च वा ह अह एव एवं नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो शम् अम् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् पुनर् मृषम् आहो स्थित सह नमस् अते अन्तरेण अन्तरा अवश्यम् कृतम् । अभावानीमा प्रतिषेधे । ईषत् किल खलु वै आरात् दूरात् भर्स पद् तद् । स्वाहा । इत्येवमादिर्गणो निपातसंज्ञो भवति । द्व्यक्षरो नेति ज्ञेयम् ॥ तसादिर्विभक्त्यर्थे निपात्यते । ११ । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । अन्यस्मिन्काले अन्यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वथा उभयथा अन्यथा अन्यतरथा इतरथा । तस्मादिति ततः । यस्मादिति यतः । अस्मादिति अतः । कुतः अमुतः युष्मतः अस्मतः भवतः । सार्वविभक्तिकस्तस् इत्येके । पूर्वतः सर्वतः पूर्वस्मिन्निति पुरस्तात् । अपरस्मिन्नित्य-परस्तात् । परस्मिन्निति परेण—परस्तात् ॥ आदिश्च दूरे । १२ । दूरेऽर्थे वाच्ये सति आदिन् प्रत्ययो भवति । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति

रमाभ्याम् । अतियुष्मभ्यम् अत्यस्मभ्यम् । अतियुष्मत् अत्यस्मत् । अतियुष्मा-भ्याम् अत्यस्माभ्याम् । अतियुष्मत् अत्यस्मत् । अतितव अतिमम । अतियुष्मयोः अत्यस्मयोः । अतियुष्माकम् अत्यस्माकम् । अतियुष्मयम् अत्यस्मयम् । इति केचित् । अतियुष्मयि अत्यस्मयि । अतियुष्मयोः अत्यस्मयोः । अतियुष्मासु अत्यस्मासु । अनेनैव प्रकारेण सर्वमूह्यम् ॥ इति युष्मदस्मत्स्वरूपप्रक्रिया ॥ ११ ॥

---

अथानयोरादेशविशेषाभिर्निरूप्यते ॥ ॥ युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ ॥ १ ॥ युष्मदस्मदोर्यथासंख्यमेते आदेशाः स्युः । षष्ठ्यादयो षष्ठीचतुर्थीद्वितीयासहितयोः । सविभक्तिकयोरेव युष्मत्सु । अस्मयोः युष्म अस्मत्सु इत्यादौ विभक्तिलोपे कृते आदेशा नेति ज्ञेयम् । तत्रैकवचनेन तद्य तेमे भवतः । द्विवचनेन वां नौ बहुवचनेन वस्नसौ ॥

स्वामी ते स समायातः स्वामी मे शोभनं गतः ॥
नमस्ते भगवन् ! भूयो देहि मे मोक्षमव्ययम् ॥ ४३ ॥

स्वामी वां स जगदीशो द्रष्टा नौ रामपावनाम् ॥
रामा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥ ४४ ॥

देवो वामवताद्विष्णुर्भरक्षतान्नौ जनार्दनः ॥
स्वामी वो बलवान् राजा स्वामी नोऽस्ति जनार्दनः ॥ ४५ ॥

नमो वो ब्रह्मविद्भ्यो ज्ञानं नो दीयतां धनम् ॥
धामस्वाम्यः प्रपश्याम पश्यामो नः सुहृज्जनः ॥ ४६ ॥

त्वा मा ॥ २ ॥ अमा सहितयोर्युष्मदस्मदोस्त्वा मा इत्येतावादेशौ भवतः ॥

पश्यामि त्वा महाकीर्ते पश्य मा मदभेदकम् ॥
पश्यामि त्वा जगत्पूज्यं पश्य मा जगतां पतिम् ॥ ४७ ॥

नादौ ॥ ३ ॥ पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति ॥

मम स्वामी भवेत्कृष्णस्तव स्वामी महेश्वरः ॥
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥ ४८ ॥

तव ये बान्धवा राजन् ! मम तेऽप्यतिबान्धवाः ॥
संबोधनपदात्पूर्वे न भवन्ति वसादयः ॥ ४९ ॥

मने तव । देवास्मान्पाहि ॥ पदात्परयोरेवैते आदेशा वक्तव्याः ॥ ४ ॥ त्वां पातु । मां पातु ॥ पदे आदेशा अन्वादेशे नित्यमनन्वादेशे वा वक्तव्याः ॥ ५ ॥

यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः ॥
अनन्वादेशे तु त्वं मे मम वा देवोऽसि ॥ विद्यमानपूर्वात्प्रथमान्तादक्र

निमित्तात्कर्मयोगे सप्तमी च वक्तव्या । ४६ ।
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ॥
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ८० ॥
गुणभेदान्तराकाङ्क्षं सीमेति मोक्षपदे बुधे ॥
पुष्कलो मृगभेदः स्यात्तस्य सौगन्ध्यहेतुकः ॥ ८१ ॥

विषये च । ४७ । सर्वे चतुर । विषयो नामान्यत्र भावः ॥ षष्ठी सप्तम्यौ चानादरे । ४८ । बहूनां क्रोशतां गतश्चोरः । मातापित्रो रुदतो प्रव्रजति पुत्रः । बहुषु साधुषु वदत्स्वपि स्वप्नास्थो याति साधुमार्गेण । बहुषु वदत्स्वपि स्वमनास्थो यात्यसाधुमार्गेण ॥ अभ्योक्ते प्रथमा । ४९ । यदि कार्योपयोगाख्यातेन कृता भवेत् भवति तदा प्रथमा प्रयोक्तव्या । यथा क्रियते । घटः कर्म । भातक्षुरं पश्चिमि भाद्योपरके भागः । छन्दसि स्यादिः सर्वत्र । इति गृहोतीत्यस्मिन्नर्थे यथा गृहीति । पुनस्तु भवत्स्यति । भगवतीभिरिष्टुः ॥

कर्ता कर्म च करणं संप्रदानं तथैव च ॥
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ ८२ ॥
द्वितीया कर्मणि ज्ञेया कर्तरि प्रथमा सदा ॥
उक्तकर्तृप्रयोगोऽयं स तथा यत्र प्रयुज्यते ॥ ८३ ॥
तृतीया कर्तरि यत्र कर्मणि प्रथमा तथा ॥
उक्तकर्मप्रयोगोऽयं न तथा परस्मैपदम् ॥ ८४ ॥

स्वतन्त्रः कर्ता । ५० । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । भवानीमुपयास्यत्यभयः कर्ता ॥ साधकतमं करणम् । ५१ । क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ कर्तृकरणयोस्तृतीया । ५२ । अनभिहिते कर्तरि करणे च तृतीया स्यात् ॥ अकथितं च । ५३ । अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ॥
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ ८५ ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति । हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञः स्या

व्यर्थेऽव्ययीभावः"। ३। अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति। इति समाससंज्ञायाम् ॥ "समासप्रत्ययपयो"। ४। समासे च समासाख्या विभक्तेः प्रत्यये च परे विभक्तेर्लुग्भवति नामसंज्ञायां स्यादिविभक्तिर्भवति ॥ "स नपुंसकम्"। ५। सोऽव्ययीभावः समासो नपुंसकलिङ्गो भवति। नपुंसकत्वाद्ध्रस्वत्वम् ॥ "अव्ययीभावाच्च"। ६। अव्ययीभावात्परस्याविभक्तेर्लुग्भवति। अधिहरि गृहकार्यम्। रामप्रतिक्रान्तमतिरि कुलम्। गामतिक्रान्तमतिगु गच्छम् ॥ "अत्यादयः क्रान्ताद्यर्थे द्वितीयया"। ७। क्रान्ताद्यर्थे वर्तमाना अत्यादयो द्वितीयया सह समस्यन्ते स तत्पुरुषसंज्ञकः समासो भवति ॥ "अत्यादयो संख्यासमानाभिकापेक्षार्थे च पदकर्म्यौ"। ८ ॥ "यथाऽसादृश्ये"। ९। यथाशब्दोऽसादृश्ये वर्तमानः समस्यते सोऽव्ययीभावः समासो भवति। योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। शक्तिमनतिक्रम्य करोतीति यथाशक्ति करोति। सादृश्ये किम्। यथा हरिस्तथा हरः। कुम्भस्य समीपमिति विग्रहे समासादिपूर्ववत्। अव्ययीभावात् (अ० १६ सू० ६) इति प्राप्ते ॥ "अतोऽमन्तः"। १०। अकारान्तादव्ययीभावात्परस्याविभक्तेरम् भवति। अतः पर्यन्तता। तथा च पाणिनीये ॥ "नाव्ययीभावादतोऽम्त्वपञ्चम्याः"। ११। अदन्तादव्ययीभावात् सुपो लुक् तस्य पञ्चमीं विनाऽम्भावः स्यात्। उपकुम्भं वर्तते ॥ "वा टाङ्याः"। १२। टा ङि इत्येतयोर्वा अम् भवति। अतोऽमन्तः (अ० १६ सू० १०) वा टाङ्यो। अत्र टाङि एतत्सम्भावनीयसप्तम्योर्द्विवचनबहुवचनयोरप्युपलक्षणम्। तेन द्विवचनबहुवचनयोरपि वा अम् भवति न लुक्। पञ्चम्यास्तु अम्लुकोर्निषेधः। उपकुम्भस्य कृतमुपकुम्भकृतम्। उपकुम्भं देहि। आगत इति शिष्यादुपकुम्भादानय। उपकुम्भं देहि। उपकुम्भं निधेहि, उपकुम्भे निधेहि ॥ "अवधारणार्थे यावति च"। १३। अवधारणार्थे यावच्छब्दे प्रयुज्यमाने अव्ययपूर्वपदसमासेऽपि योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति। यावन्त्यमत्राणि तावतो ब्राह्मणानामन्त्रयस्वेति यावदमत्रम् ॥ "यावदवधारणे"। १४। अवधारणार्थे यावच्छब्दो नित्यं समस्यते ॥ "आङ्मर्यादाभिविध्योः"। १५। मर्यादायामभिविधौ च आङ् वा समस्यते। आपाटलिपुत्रं मर्यादीकृत्येत्यापाटलिपुत्रम्। आबालमभिव्याप्य आबालम्। तेन विनेति मर्यादा। तत्सहितमभिविधिः ॥ "पारेमध्ये षष्ठ्या वा"। १६। पारमध्यशब्दौ षष्ठ्या वा समस्येते। एदन्तौ निपात्यौ सूत्रात् ॥ "प्रथमानिर्दिष्टं समास उपसर्जनम्"। १७। समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ "उपसर्जनं पूर्वम्"। १८। समासे उपसर्जनं प्राक् प्रयोज्यम्। गङ्गायाः पारे इति पारेगङ्गम्-गङ्गापारे। गङ्गाया मध्ये इति मध्येगङ्गम्-गङ्गामध्ये। अविभाषामव्ययीभावो विकल्पितो वर्तते ॥ "अमावौ तत्पुरुषः"। १९। द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥ "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"। २०। अन्वये सति समस्यते स

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ईत | ईयाताम् | ईरन् |
| २ | ईथास् | ईयाथाम् | ईध्वम् |
| ३ | ईय | ईवहि | ईमहि |

याईं । १९ । अकारान्तात्परो या ई भवति । भवेत् (अ॰ १ ६ १ सू॰ ११) भवेत् भवेताम् भवेयुः । युस इट् । २० । अकारान्तस्य युस इडागमो भवति । भवेः । भवेतम् । भवेत । यामियम् । २१ । अकारान्तात्परो यामियं भवति । भवेयम् भवेव भवेम । सिद्धे गुरुलघुभूयस्त्वे भवेदिति विधिः । भवेदसौ वै एतयो मामनतादिति समाधानम् । भवेत भवेयाताम् भवेरन् । भवेथाः भवेयाथाम् भवेध्वम् । भवेय भवेवहि भवेमहि । भो हरिभक्तिं भजेय । आशीःप्रेरणयोः । २२ । अप्राप्तप्रार्थनमाशीः परस्येष्टार्थसंपादनं वा । प्रेरणं प्रवर्तनं तत्र पुरुषस्य प्रत्यया भवन्ति । एषां संज्ञा लोट् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | तुप् | ताम् | अन्तु |
| २ | हि | तम् | त |
| ३ | आनिप् | आवप् | आमप् |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ताम् | आताम् | अन्ताम् |
| २ | स्व | आथाम् | ध्वम् |
| ३ | ऐप् | आवहैप् | आमहैप् |

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । २३ । भवतु भवतात् भवताम् भवन्तु । भव । २४ । अकारान्तस्य हेर्लुग्भवति । न तु तातङः । तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं नतस्थानेऽर्थम् । भव-भवतात् भवतम् भवत । भवानि भवाव भवाम । आयुष्मान् भवतु भवान् । अध्ययनसम्पत्ती भव सौम्य । भवताम् भवेताम् भवन्ताम् । भवस्व भवेथाम् भवध्वम् । भवै भवावहै भवाम- है । हरिं भजस्व त्वम् । अनद्यतनेऽतीते । २५ । अतीतायाः रात्रेर्यामद्वयात्परिस्थायिन्या रात्रावित्यस्य यामस्य सोऽद्यतनस्ततोऽन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले द्योत्ये प्रत्यया भवन्ति एषां संज्ञा लङ् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | तिप् | ताम् | अन् |
| २ | सिप् | तम् | त |

